# प्रस्तावना

विशिष्टधर्मयोग्यताप्रतिपादकस्यास्य ग्रन्थस्य प्रणेतारो महोपाध्यायजिनमण्डनगणिवराः श्रीतपागच्छाधीशपूज्यपादसोमसुन्दरसूरीश्वरशिष्याः, पूज्यपादैः श्राद्धगुणविवरणाख्ये ग्रन्थे मार्गानुसारिगुणानां सविस्तरं वर्णनं कृतं अस्मिन्ग्रन्थे संक्षिप्ततया कृतमिति मन्येऽल्पमेधसामुपकाराय, न ज्ञायतेऽयं ग्रन्थो प्राग् विरचितो वा श्राद्धगुणविवरणाख्यः ? यद् द्वयोर्ग्रन्थयोर्मध्ये गुणव्याख्याप्रतिपादिकाः पंक्तयस्सदृश्यो वर्तन्ते दृष्टान्तादिष्वपि बहुधा समानता भवति परं केषुचित्स्थलेषु भिन्नतापि विलोक्यते, एतद्ग्रन्थरत्नस्य प्राचीनाऽतीवजीर्णा चतुर्दशपत्रात्मिका शुद्धा प्रतिः पूज्यपादाचार्यविजयकुमुदसूरीश्वराणां पुस्तकभाण्डागाराल्लब्धा, अनुमीयते च प्रायः चतुःवर्षशतप्राक्कालभाविनी, अन्यपुस्तकभाण्डागारेषु विद्यते न वेति न ज्ञायते; एतत्प्रान्ते "श्रीजिनमण्डनोपाध्यायकृतं न्यायसम्पन्नविभव इत्यादि ३५ गुणविवरणम्" इत्येवं लिखितमस्ति तेन कदा दुर्लभोऽयं ग्रन्थो विरचित इति स्पष्टं न ज्ञायते, तथापि श्राद्धगुणविवरणाख्ये ग्रन्थे तत्प्रशस्त्यां पूज्यपादैरेव "मनुनन्दाष्टकवर्षे ग्रन्थोऽयं निर्मितश्चिरं नन्द्यात्-" इत्युक्तत्वात्-अष्टनवत्यधिकचतुर्दशशतवर्षात् किञ्चिन्न्यूनाधिककालः सम्भाव्यते। अपूर्वेऽस्मिन्ग्रंथे कृतं विषयप्रतिपादनमनुक्रमणिकातो विलोकनीयं, प्रयत्ने कृतेऽपि या काचिदशुद्धिर्भवेद् सा संशोधनीया सज्जनैरिति विज्ञपयत्याचार्यश्रीविजयकुमुदसूरिचरणकिंकरो

मेरुविजयः

# अनुक्रमणिका

## शुद्धिपत्रकम्

| पृ. | अशुद्धम् | शुद्धम् |
|---|---|---|
| २ | कुंवन् | कुर्वन् |
| ३ | व्यय | व्ययं |
| ३ | तत्रोपद्यते | तत्रोपपद्यते |
| ५ | क | कथं |
| ५ | वखे | क्खे |
| ६ | विश्वासा तस्यत् | विश्वासात् तस्य |
| ८ | तिंति | निंति |
| ८ | सर्वसंपदः | सर्वसंपदः |
| १२ | कन्यादाः | कन्यादानं |
| १३ | तत्वः | तत्त्वः |
| १६ | जीण | जीर्ण- |
| १६ | जालाथ | जालार्थं |
| १६ | सून | सूत्रं |
| २२ | त्यक्तु | त्यक्तुं |
| ४१ | तत्वतत्वा | तत्त्वातत्त्वा- |

अर्हम्

महोपाध्यायश्रीजिनमण्डनगणिविरचितं

# मार्गानुसारिपंचत्रिंशद्गुणविवरणम् ।

सिवसुहहेऊ कमेणं सावयधम्मोवि कप्पतरुतुल्लो । तम्हा जुग्गजियाणं दायव्वो धम्मरसियाणं ॥१॥

इह श्रावकधर्म्मोऽपि क्रमेण मुक्तिहेतुतः कल्पद्रुमादितुल्यः, तस्मात् योग्यजीवेभ्यो धर्मरसिकेभ्यो दातव्यः, न चान्येभ्यो, विशेषगुणप्राप्त्यऽयोगात् । यतः—चूताङ्कुरकवलनतः, कोकिलकः स्वनति चारु नतु काकः । योग्यस्य जायते खलु, हेतोरपि नेतरस्य गुणः ॥१॥ इह धर्मोपदेशदानार्हा अनेकधा, यथा-आम्रे निम्बे सुतीर्थे कचवरनिचये शुक्तिमध्येऽहिवक्त्रे, ओषध्यादौ विषद्रौ गुरुसरसि गिरौ पाण्डुभूकृष्णभूम्योः । इक्षुक्षेत्रे कषायद्रुमवनगहने मेघमुक्तं यथाम्भः, तद्वत्पात्रेषु दत्तं गुरुवदनभवं वाक्यमायाति पाकम् ॥३॥ यथा च-शुभाशुभद्रव्यसुभाविता घटा, वाम्या अवाम्याश्च तथाह्यवासिताः । सद्धर्मवासस्य तथैव योग्यतां श्रयन्ति जीवाः कतिचित् सुयोगतः ॥४॥ तैलोदका १ ऽयोऽनल २ वारिदुग्धं ३ लोहोल्लसत् सिद्धरसाः ४ क्रमेण । सद्धर्म्मरङ्गे भविनां बहूनां दृष्टान्तभावं बिभरांबभूवुः ॥५॥ अथ योग्येभ्योऽपि पूर्वं सामान्यधर्मो दातव्यः, पश्चाद्विशेषधर्मो द्वादशव्रतादिरूपः, नहि

॥१॥

भित्तौ धवलनादिरचनां विना चित्रं शोभाकारि, वस्त्रे वा पाशमन्तरेण रङ्गयोग्यता, क्षेत्रे वा खेटननिन्दसमारादिदानं विना बीजवापः, एवं सामान्यधर्म्मपूर्वक एव विशेषधर्मः शोभाभासुरः। अतः श्रीकुमारपालभूपालाय परमार्हत-विचारचतुर्मुख-राजर्षि-महाश्रावक-परनारीसहोदर-रुदतीवित्तपरिहरण-प्राप्तराजपितामहादिरूपबिरुद-परम्परोज्जीवितत्रिभुवनातिशायिजैनराजेन्द्रप्रतिष्ठागरिष्ठाय कलिकालसर्वज्ञः श्रीहेमचन्द्राचार्यः प्रथमं सामान्यमेव धर्ममाह। तथाहि-

न्यायसंपन्नविभवः शिष्टाचारप्रशंसकः। कुलशीलसमैः सार्धं, कृतोद्वाहो[३]ऽन्यगोत्रजैः ॥१॥
पापभीरुः प्रसिद्धं च देशाचारं समाचरन्। अवर्णवादी[६] न क्वापि राजादिषु विशेषतः ॥२॥
अनातिव्यक्तगुप्ते च, स्थाने सुप्रातिवेश्मिके। अनेकनिर्गमद्वारविवर्जितनिकेतनः ॥३॥
कृतसङ्गः सदाचारैः, मातापित्रोश्च पूजकः। त्यजन्नुपप्लुतं स्थान[११]मप्रवृत्तश्च गर्हिते ॥४॥
व्ययमायोचितं कुर्वन्[१२], वेषं वित्तानुसारतः[१३]। अष्टभिर्धीगुणैर्युक्तः[१४], शृण्वानो धर्ममन्वहम्[१५] ॥५॥
अजीर्णे भोजनत्यागी[१६], काले भोक्ता च सात्म्यतः[१७]। अन्योऽन्याप्रतिबन्धेन, त्रिवर्गमपि साधयन्[१८] ॥६॥
यथावदतिथौ साधौ, दीने च प्रतिपत्तिकृत्[१९]। सदानभिनिविष्टश्च, पक्षपाती गुणेषु[२१] च ॥७॥
अदेशाकालयोश्चर्यां, त्यजन्[२२] जानन् बलाबलं[२३]। वृत्तस्थज्ञानवृद्धानां, पूजकः[२४] पोष्यपोषकः[२५] ॥८॥
दीर्घदर्शी[२६] विशेषज्ञः[२७], कृतज्ञो[२८], लोकवल्लभः। सलज्जः[३०] सदयः[३१] सौम्यः[३२], परोपकृति[३३]कर्मठः ॥९॥
अन्तरङ्गारिषड्वर्गपरिहारपरायणः[३४]। वशीकृतेन्द्रियग्रामो, गृहिधर्माय कल्पते ॥१०॥ दशभिः कुलकम्।

इह स्वामिद्रोह-मित्रद्रोह-विश्वसितवञ्चन-चौर्यादिगर्ह्यार्थोपार्जनपरिहारेणार्थोपार्जनोपायभूतः स्वस्ववर्णानुरूपः सदाचारो न्यायः तेन सम्पन्न उत्पन्नः विभवः संपद् यस्य स तथा। न्यायसम्पन्नो हि विभव इहलोकसुखाय अशङ्कनीयतया स्वशरीरेण तत्फलपरिभोगान्मित्रस्वजनादौ संविभागकरणाच्च। यदाह-

सर्वत्र शुचयो धीराः स्वकर्मबलगर्विताः। कुकर्मनिहतात्मानः पापाः सर्वत्र शङ्किताः॥१॥ न्यायार्जितवित्तव्यय कुर्वाणः सर्वत्र प्रशंसापात्रं यशोविभागी च गृहस्थो भवेत्। परलोकहिताय च सत्पात्रादिषु विनियोगात्, दीनादौ कृपया वितरणाच्च। लक्ष्मीरपि गृहस्थानामनेकधा, यदाह-

काचिद्बालकवन्महीतलगता मूलच्छिदाकारणं, द्रव्योपार्जनपुष्पितापि विफला काचिच्च जातिप्रभा। काचित् श्रीः कदलीव भोगसुभगा सत्पुण्यबीजच्युता, सर्व्वाङ्गं सुभगा रसाललतिकावत् पुण्यबीजाञ्चिता ॥१॥

इह च न्यायोपार्जितवित्त-सत्पात्रविनियोगाभ्यां चतुर्भङ्गी, तथाहि-

न्यायागत (द्रव्य) सत्पात्रविनियोगः अयं चाक्षेपेण पुण्यानुबन्धिपुण्यहेतुत्वात्। सुदेवत्वभोगभूमिमनुष्यत्वादिप्राप्त्यासन्नसिद्धिलाभफलः पूर्वभवब्राह्मणत्वयुक् क्रियापात्रकियद्ब्राह्मणभोजनावसरप्राप्तमासक्षपणिमहाव्रतिपारणकदानदायकनन्दिषेणवत्। धनसार्थवाहशालिभद्रधन्यतीर्थकराद्यपारणकारकादिवद् वा ॥१॥

न्यायायातद्रव्य-यत्तत्पात्रविनियोगरूपः २ भोगफलादिहेतुरपि यत्तद्भवमाप्त्या प्रान्ते विरसफलो लक्षब्राह्मणभोजीसेचनकहस्तीभूतब्राह्मणवत्। यदाह-'दानेन भोगानाप्नोति यत्र तत्रोपपद्यते०' ॥२॥

अन्यायार्जितवित्तः सत्पात्रविनियोगः तृतीयः-सुक्षेत्रोप्तसामान्यबीजफलप्राप्तिवत्, आयतौ सुखानुबन्धित्वेन गृहस्थानामनुज्ञातः । यतः-

खलोऽपि गवि दुग्धं स्यात्, दुग्धमप्युरगे विषम् । पात्रापात्रविशेषेण, तत्पात्र दानमुत्तमम् ॥१॥ अन्यथाहि बह्वारम्भानुचितवृत्तमेलितं द्रव्यं सत्पात्रादिविनियोगादि विना नरकफलमेव स्यात् मम्मणादिवत् ॥३॥

अन्यायार्जितद्रव्यः असत्पात्रदानरूपः चतुर्थः इह साधुजननिन्दितत्वात् परत्र कुगतिनिबन्धनत्वाच्च त्याज्य एव विवेकवतां, यतः-

अन्यायोपात्तवित्तस्य दानमत्यन्तदोषकृत् । धेनुं निहत्य तन्मांसै ध्वांक्षाणामिव तर्पणम् ॥१॥ अन्यायवृत्त्यार्जितं वित्तं लोकद्वयेऽप्यहितायैव, यतः-

इह हि लोकविरुद्धकारिणो वधबन्धादयो दोषाः, परत्र नरकपतनादयश्च, उक्तं च-अन्यायोपात्तवित्तेन, यो हितं हि समीहते । भक्षणात् कालकुटस्य, सोऽभिवाञ्छति जीवितुम् ॥१॥ तथा अन्यायोपार्जितवित्तं वर्षादिप्रान्ते राजचोराग्निजलादिभिरपह्रियमाणत्वात् न चिरस्थायि, नापि भोगपुण्यव्ययादिकृदपि, उक्तं च-अन्यायोपार्जितं वित्तं, दशवर्षाणि तिष्ठति । प्राप्ते त्वेकादशे वर्षे, समूलं च विनश्यति ॥१॥ अत्र वञ्चकश्रेष्ठिकथा-क्वापि ग्रामे धनः श्रेष्ठी, धनश्रीः भार्या, धनसारः सुतः, श्रेष्ठी मधुरालापकूटतुलामानन्वपुराणादिमीलनरसभेदादिकुव्यापारप्रकारैर्मुग्धग्रामटलोकवञ्चनवृत्त्या धनार्जकः, सहि लोकवञ्चनया परमार्थेन स्वात्मवञ्चक एव, यतः-कौटिल्यपटवः पापाः मायया बकवृत्तयः । भुवनं वञ्चयमाना वञ्चयन्ते स्वमेव हि ॥१॥ मिलितमपि द्रव्यं वर्षान्तेऽन्यायायातत्वाच्चौराग्निराजादिभिरपह्रियते, गृहे किमपि न तिष्ठति, क्रमेण सुतो ग्रामान्तरवासिसुश्रावकश्रेष्ठिसुतां परिणायितः, वधूर्गृहे

समायाता श्राविका ज्ञातधर्मा श्रेष्ठिनोऽट्टे गृहासन्नं, श्रेष्ठी ग्रहणदानादिसमये पूर्वं संकेतितपञ्चपोकरत्रिपोकरमानकसम्बन्धेन सुतस्यापि पञ्चपोकर त्रिपोकररूपापनाम्ना आह्वानं कथयति, क्रमेण लोकैर्ज्ञातवृत्तान्तैर्वञ्चकश्रेष्ठीति नाम दत्तं श्रेष्ठिनः, एकदा वध्वा भर्त्ता पृष्टः, कस्मात्तातो युष्माकमपनाम्नाऽऽकारयति; तेन सर्वोऽपि व्यतिकरः कथितः, वध्वा धर्मवासितया श्रेष्ठिनोऽग्रे विज्ञप्तं, एवमन्यायवृत्त्या द्रव्यं न तिष्ठति; युष्मद्गृहे स्थास्यत्यपि न कदापि, श्रेष्ठिनोक्तं, क निर्वाहः स्यात्? तयोक्तं, न्यायार्जितं चिरस्थायि, सुपात्रसुक्षेत्रविनियोगेन वृद्धिमपि लभते, यदि न प्रत्ययो भवतां, तदा षण्मासीं यावत् कूटमानतुलादिपरिहारेण न्यायमार्गेण व्यवसायं कुरुत, ततो वधूवचसा श्रेष्ठी तथा चक्रे, षण्मास्या पञ्चसेरमितं स्वर्णमर्जितं, सत्यवादित्वसत्यकारित्वात् ग्राहकाः सर्वेऽपि तस्यैवाट्टे गृह्णन्ति ददति च, लोके कीर्तिः, स्वर्णमानीय वध्वाः समर्पितं, वधूः प्राह, परीक्षां कुरुत, ततः सुतपार्श्वात् पञ्चसेरीं चर्मवेष्टितां स्वनामाङ्कितं कारयित्वा त्रिदिनीं राजपथे मुक्ता, केनाप्यदृष्टां गृहित्वा पश्चात् क्वापि वने जलाशये क्षिप्ता, मत्स्येन गलिता मत्स्यो जाले पतितः पाटितश्च निर्गता पञ्चसेरी, नाम्नोपलक्षिता श्रेष्ठिनोऽट्टे मात्सिकेनानीता किंचिद्दत्त्वा गृहीता, वधूवचसि प्रत्ययो जातः, ततो न्यायमार्गशुद्धव्यवहारादिना वित्तान्युपार्जयन् सप्तक्षेत्र्यामनेकधा व्ययं कुर्वन् प्रौढव्यवहारी सुखी च सम्पन्नः, तस्मान्न्याय एव परमार्थतोऽर्थोपार्जनोपायोपनिषत्, तथा अन्यायोपलक्षणात् देवद्रव्यपाखण्डिपार्श्वस्थादिधनेन व्यवसायाद्यपि महादोषकृत्। यदाह–

अन्यायदेवपाषण्डितद्धनानां धनेन यः। वृद्धिमिच्छति मुग्धोऽसौ, विषमत्ति जिजीविषुः ॥१॥ तथा–भवखेइ जो उवक्खेइ जिणदव्वं तु सावओ। पन्नाहीणो भवे जो उ लिप्पइ पावकम्मुणा ॥१॥ प्रज्ञाहीनः स्वल्पेन वा बहुना वा कार्यसिद्धिमजानानो मन्द-

मतितया यथाकथञ्चिद्देवद्रव्यव्ययकारी कूटलेख्यश्च यो भवेत् । यत्तदोर्नित्याभिसम्बन्धात् स लिप्यते पापकर्मणा। तथा-आयाणं जो भंजइ, पडिवन्नधणं न देइ देवस्स । नस्संतं समुविक्खइ, सोविहु परिभमइ संसारे ।२॥ चेइयदव्वं साहारणं च दुहइ मोहियमईओ। धम्मं च सो न याणइ, अहव बद्धाउओ नरए ॥३॥ चेइयदव्वविणासे तद्दव्वविणासणे दुविहभेए । साहू उविक्खमाणो, अणंतसंसारिओ भणिओ ॥४॥ सव्वत्थामेण तहिं संघेण य होइ लगियव्वं तु । अचरित्तचरित्तीण य सव्वेसिं होइ कज्जं तु ॥५॥ जिणपवयणवुड्ढिकरं पभावगं नाणदंसणगुणाणं। रक्खंतो जिणदव्वं परित्तसंसारिओ होई ॥६॥ जिण० वड्ढंतोजिणदव्वं, तित्थयरत्तं लहइ जीवो ॥७॥ जिण० भक्खंतो जिणदव्वं। अणंतसंसारिओ होई ॥८॥ चेइयदव्वं गिण्हित्तु, भुंजए जो उ देइ साहूणं । सो आणाअणवत्थं, पावइ लिंतोवि दिंतोवि ॥९॥ एवं जो जिणदव्वं तु, सड्ढो भक्खे उविक्खए। विसं सो भक्खए वालो, जीविअट्ठी न संसओ ॥१०॥ भक्खणे देवदव्वस्स, परत्थीगमणेण य । सत्तमं नरयं जंति, सत्तवाराओ गोयमा ! ॥११॥ तथा लौकिकेऽपि-देवद्रव्येण या वृद्धिर्गुरुद्रव्येण यद्धनं। तद्धनं कुलनाशाय मृतोऽपि नरकं व्रजेत् ॥१॥ प्रभास्वे मा मतिं कुर्यात्, प्राणैः कण्ठगतैरपि । अग्निदग्धाः प्ररोहन्ति, प्रभादग्धो न रोहति ॥२॥ प्रभास्वे लोकप्रतीते साधारणद्रव्ये । प्रभास्वं ब्रह्महत्या च, दरिद्रस्य च यद्धनं । गुरुपत्नी देवद्रव्यं, स्वर्गस्थमपि पातयेत् ॥३॥ अत्रार्थे संकाशश्राद्धो दृष्टान्तः । यथा-गन्धिलावतीपुर्यां-सम्यग्दर्शनशुद्धात्मा, गृहीतद्वादशव्रतः । सर्वज्ञोक्तक्रियासक्तो, जीवाजीवादितत्त्ववित् ॥१॥ सन्ध्याद्वये प्रतिक्रामन्नर्हन् सन्ध्यात्रयेऽर्हतः । विधिना वितरन् दानं, तपः कुर्वंश्च पर्वसु ॥२॥ अजातशत्रुः सन्तोषी विश्वासस्य विलासभूः । संकाशनामा तत्रासीत् श्रावकः श्रावकात्मजः ॥३॥ विशेषकम् । तत्र पुरे शक्रावतारचैत्यं, तद्द्रव्यचिन्तां संकाश एव करोति कलान्तरैर्वर्द्धयत्यपि । लेख्यका अपि सर्वाणि स्वयमेव करोति सः । विश्वासा तस्यत्

नाधत्ते कोऽप्यन्यः परिपन्थितताम् ॥४॥ अन्यदा तेन कुकर्मोदयवशाद्देवद्रव्यं भक्षितं ततो गृद्धश्च लुब्धश्च, नानुतापमपि व्यधात् ।
नात्मनिन्दां न वा गर्हां, न तद्दातुं मनोऽपि च ॥५॥ आयुः क्षये मृत्वा चातुर्गतिकसंसारेऽसंख्यान् भवान् भ्रान्तः, तत्र नरकगतौ
तेन दुःखान्येवं सोढानि । तथाहि-दसविह वेयण निरए, सी १ ओसीण २ खु ३ प्पिवास ४ कंडुअं ५ । भय ६ सोग ७ पारवस्सं,
८ जरोअ ९ वाहीअ १० दसमोअ ॥६॥ पणकोडी अडसट्ठी लक्खा नवनवइ सहस्सपञ्चसया । चुलसी अहिया नरए अपइट्ठाणंमि
वाहीओ ॥२॥ गर्भवासायितध्वान्तवसासृग्मांसकर्दमे । कपिकच्छूसमस्पर्शे, विलपद्दीननारके ॥३॥ प्रदीप्ताङ्गारकल्पेषु, वज्रकुण्डेष्व-
सन्धिषु । कूजन्तः करुणं केचिद् दह्यन्ते नरकाग्निना ॥४॥ अग्निभीताः प्रधावन्तो, गत्वा वैतरणीं नदीम् । शीततोयामिमां ज्ञात्वा,
क्षाराम्भसि पतन्ति ते ॥५॥ क्षारदग्धशरीरास्ते, मृगवेगोत्थिताः पुनः । असिपत्रवनं यान्ति, छायायां कृतबुद्धयः ॥६॥ शक्त्यृष्टि-
प्रासकुन्तैश्च, खङ्गतोमरपट्टिशैः । छिद्यन्ते कृपणास्तत्र, पतद्भिर्वातकम्पितैः ॥७॥ निपतन्त उत्पतन्तो, विचेष्टमाना महीतले दीनाः ।
नेक्षन्ते त्रातारं नैरयिकाः कर्मपटलान्धाः ॥८॥ श्रवणलवनं नेत्रोद्धारं करक्रमपाटनं । हृदयदहनं नाशाच्छेदं प्रतिक्षणदारुणम् ॥९॥
कटिविदहनं तीक्ष्णापातत्रिशूलविभेदनम् । दहनवदनैः कङ्कैर्घोरैः समंततो विभक्षणम् ॥१०॥ भृज्यन्ते ज्वलदम्बरीषहुतभुक् ज्वा-
लाभिराराविणो, दीप्ताङ्गारनिभेषु व्रजभवनेष्वङ्गारकेषूत्थिताः । दह्यन्ते विकृतोर्ध्वबाहुवदनाः क्रन्दन्त आर्तस्वनाः, पश्यन्तः कृपणा
दिशो विशरणास्त्राणाय को नो भवेत् ॥११॥ तिर्यग्गतौ तु ॥ कर्णादिछेदनं भारवाहनं रज्जुबन्धनम् । कशाङ्कुशप्राजनादिप्रहारा
दमनाङ्कने ॥१२॥ नाशावेधस्तृषाक्षुच्च, शीतवातातपस्थितिः । एवं तिर्यक्षु दुःखानि, तेन सोढान्यनेकशः ॥१३॥ मनुष्यगतावपि ॥
शिरःपाण्यंह्रिनाशौष्ठरसज्ञाश्रवणच्छिदा । कारावासः प्रवासश्च, दासत्वं वधबन्धने ॥१४॥ आतङ्कशोकदारिद्र्यापमानादीनि भूरिशः ।

मनुष्यत्वेऽपि संप्राप्ते, दुःखाण्यनुबभूव सः ॥१५॥ एवमसंख्यातभवभ्रमणान्ते तगरापुर्यामिभ्यपुत्रत्वेन जातः,पितुर्लक्ष्मीहानिः, माता-पितृमरणं, लोकनिन्द्यत्वभोजनसंदेहादिभूरिदुःखं सेहे तत्र, अन्यदा तत्र केवल्यागमने वन्दनार्थं गतः संकाशजीवः, प्रस्तावे प्राग्भवप्रश्नः कृतः, केवलिना प्राग्भवादिदुःखं देवद्रव्यभक्षणसमुद्भवं सर्वमकथि । तच्छ्रुत्वा आत्मनिन्दा एवं-हा हा कुधीरनार्योऽहं, पापात्मा पापकर्मकृत । निस्त्रपो गतमर्यादः, क्लीबः स्वकुलपांसनः ॥१॥ लब्ध्वाऽपि मानुषं जन्म, धर्मं विज्ञाय चार्हतम् । श्रुत्वा सिद्धान्तसाराणि, सुसाधुवरविस्त्यया ॥२॥ योऽहं लोभाभिभूतात्मा, मूढचित्तो नराधमः । ईदृग्दुःखविपाकं यद्देवद्रव्यमभक्षयम् ॥३॥ ततः साधुवचसाभिग्रहग्रहणम् ॥ वित्तं संपत्स्यते यन्मे, भोजनाच्छादनाधिकम् । अहं संयोजयिष्यामि सर्वं चैत्येषु तत् प्रभो ॥४॥ यदैवाभिग्रहस्तेन, जगृहे शुद्धचेतसा । तदैवाभिमुखं तस्य, वित्तेनाऽपि विलोकितम् ॥५॥ तदनु जीर्णोद्धारकलशारात्रिकनवीनप्रासाद-प्रतिमाऽष्टाह्निकाविधिस्नात्रत्रिपूजादिपुण्यादि कृत्वा देवद्रव्यभक्षणोत्थपापं क्षपयित्वा यावज्जीवमभिग्रहं मपाल्य निःशेषचैत्यानां वित्तानि वर्धयित्वा देवभूयं जगाम । देवद्रव्यभक्षणविषये संकाशकथा । एवं जे जिणदव्वं, वुड्ढिं, निंति सुसावगा । ताणं रिद्धी पवड्ढेइ, कित्ती सुक्खं बलं तहा ॥१॥ अथ यद्यपि कस्यचित्पापानुबन्धिपुण्यकर्मवशादैहिकी विपन्न दृश्यते तथाप्यायत्यामवश्यं भाविन्येव । यदाह-पापेनैवार्थरागान्धः, फलमाप्नोति यत् क्वचित् । बडिशामिषवत्तत्तमविनाश्य न जीर्यति ॥१॥ कदाचिल्लोभाकुलिततया वह्वारम्भानुचितव्यवसायधर्मकर्मादिव्ययसंक्षेपकरणादिप्रकारैः क्रियमाणैर्न लक्ष्मीवृद्धिर्जायते पुण्यानुसारित्वात् तस्याः, यतः-यत्नानुसारिणीविद्या, लक्ष्मीः पुण्यानुसारिणी । दानानुसारिणी कीर्तिर्बुद्धिः कर्मानुसारिणी ॥१॥ यद्वा-निपानमिव मण्डूकाः, सरःपूर्णमिवाण्डजाः । शुभकर्माणमायान्ति विवशाः सर्वसंपदः ॥२॥ अत्र धनाश्रेष्ठिज्ञातम् । यथा-काञ्चनपुरे सुन्दरश्रेष्ठिभूः धनः श्रेष्ठी ९९.

लक्षधनस्वामी । तत् पित्रा ४४ अर्जिताः ५५ लक्षाः पुराप्यभूवन्, पितरि स्वर्गगते तेन धनेन कोटिमर्जयितुं गृहादिव्यये लक्षमेकं न्यूनं कृतं, तथापि कियत्कालेन लेख्यके विलोकिते परवस्तुत्रुटयादिना तावदेव द्रव्यं, नाधिकं, ततो धनार्जनाय देशान्तरे गतः समधिककोटिमुपार्ज्य पश्चाद् वलमानो धनश्रेष्ठी मार्गे भिल्लैर्लुण्टितः किंचिदाभरणादिकं गुप्तीकृतं लात्वा गृहे समागतः, पुनर्लेख्यके तावदेव द्रव्यं, दिनानि यान्ति, एकदा जिनदत्तनामा मित्रं पृष्टः, तेनोक्तं, गृहादिव्ययं तावन्तमेव कुरु, ततस्तथा कृत्वा पुनर्लोभाद् देशान्तरात्सपादकोटिमुपार्ज्य पश्चादागच्छन् क्वापि ग्रामे दग्धसर्वस्वो गृहेऽगात्, लेख्यके पुनस्तावदेव, ततो मित्रेणोक्तं, भवतः कर्मवशादेतावदेव द्रव्यं भावि, किमर्थं क्लिश्यसे इत्यादि, ततः स्वनिन्दापरः स गृहे तस्थौ, एकदा कोटिध्वजवतां लक्षेश्च रम्युत्थानादिप्रतिपत्तिं क्रियमाणां दृष्ट्वा साहणवाहणपाहणेति द्रव्यार्जनप्रकारत्रयं श्रुत्वा पोते चटितः, मित्रेण वार्यमाणोऽपि बहूपार्ज्य कोटिमूल्यं रत्नं जङ्घायां प्रक्षिप्य पश्चादागच्छन् भग्नपोतो फलकं लब्ध्वा उत्तीर्य गृहमागतः, लेख्यके पुनः तावदेव ९९ लक्षाः कोटिमूल्यस्य रत्नस्य जङ्घायां गुप्तस्य वपुस्तापादिना अल्पमूल्यभवनात्, ततः श्रान्तः पुण्यपरः समधिकगृहधर्मव्ययादिपरोऽभवत् । तथाकरणे च गृहवस्तुनो महर्घतायां जातायां कतिभिर्दिनैः कोटिरपि जाता, ततः शनैः शनैः समधिका च, ततोऽनेकप्रासादप्रतिमादिसप्तक्षेत्र्यां स्वधनं व्ययित्वा प्रव्रज्य पश्चात्तपसा केवली जातः, शिवं गतः । एवमन्यायातिक्लेशादिपरिहारेण पुण्यगृहादिव्ययमनुशीलयतामेव प्रायोऽर्थवृद्धिः, विभवत्वं च गार्हस्थ्ये प्रधानं कारणमित्यादौ न्यायसम्पन्नविभव इत्युक्तम् ॥१॥ (प्रथमो गुणः)

तथा–शिष्टाचारप्रशंसकः, शिष्यन्ते स्म शिष्टाः वृत्तस्थज्ञानवृद्धसेवोपलब्धविशुद्धशिक्षाः पुरुषाः तेषामाचारश्चरितं सदाचरणरूपं तस्य प्रशंसाकृत्, तदुपबृंहणोत्साहवर्धनबहुजनसमक्षतदुत्कीर्तनसाहाय्यादिप्रदानादिप्रकारैः श्लाघाविधायकः, एवं हि क्रियमाणे

पुण्यमार्गवृद्धिः, गुणज्ञजनमानेना गुणवत्प्रवृत्तिदर्शनं उत्तमपथानुयानं सर्वदा सर्वेषां महोत्साहोत्सर्पणमित्यादि । अथ कोऽयं सदाचारः, तत्राह—लोकापवादभीरुत्वं, दीनाभ्युद्धरणादरः । कृतज्ञता सुदाक्षिण्यं, सदाचारः प्रकीर्तितः ॥१॥ सर्वत्र निन्दासंत्यागो, वर्णवादः सुसाधुषु । आपद्यदैन्यमत्यन्तं, तद्वत्सम्पदि नम्रता ॥२॥ प्रस्तावे मितभाषित्वमविसंवादनं तथा । प्रतिपन्नक्रिया चेति, कुलधर्मानुपालनम् ॥३॥ असद्व्ययपरित्यागः स्थाने चैव क्रिया सदा । प्रधानकार्ये निर्बन्धः, प्रमादस्य विसर्जनम् ॥४॥ लोकाचारानुवृत्तिश्च, सर्वत्रौचित्यपालनम् । प्रवृत्तिर्गर्हिते नैव, प्राणैः कण्ठगतैरपि ॥५॥ इत्यादि । एवं वा—विपद्युच्चैःस्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् । असन्तो नाऽभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥१॥ इयं च शिष्टाचारप्रशंसा धर्मबीजाधानतया प्रेत्यधर्मप्राप्तिहेतुतया परमपदहेतुर्भवति चौरोदाहरणेन, तद्यथा—कौशाम्ब्यां पुरि राजाऽस्ति, जितारिर्नाम विश्रुतः । जिनधर्मरसोल्लासः, सद्भूतगुणसन्निधिः ॥१॥ श्रेष्ठिनो धनयक्षाह्वौ, तत्राभूतां महर्द्धिकौ । धनस्य धर्मपालोऽभूत् नन्दनः कुलनन्दनः ॥२॥ यक्षस्य वसुपालश्च वसुवृद्धिविधायकः । क्रमेण यौवनं प्राप्तौ, तौ द्वावपि मनोहरम् ॥३॥ जन्मान्तरसंस्कारादाबालत्वात्तयोरभूत् । क्षीरनीरवदत्यन्तं, मैत्री विस्मयकारिणी ॥४॥ रोचते च यदेकस्य, तदन्यस्यापि रोचते । ततो लोके गतौ ख्यातिमेकचित्ताविमाविति ॥५॥ ततः कुलोचितं कर्म, कुर्वतोर्यान्ति वासराः । अन्यदा श्रीमहावीरस्तत्रागाद् विश्ववत्सलः ॥६॥ देवैः समवसरणं कृतं, कौशाम्बीशोऽपि वन्दनार्थं समागतः सपौरजनः । तावपि श्रेष्ठिनोः सूनू कुतूहलपरायणौ वन्दनार्थं गतौ, प्रारब्धा धर्मदेशना, श्रीजिनेन । ततो मध्ये तयोर्धर्मपालस्य तद् जिनोदितम् । श्रद्धानमार्गमायाति, भाव्यते च स्वमानसे ॥७॥ स्फाराक्षो मस्तकं धुन्वन् , कर्णपर्णपुटार्पितम् । रोमाञ्चितः पिबत्युच्चैर्जिनवाक्यं यथाऽमृतम् ॥

॥८॥ तदन्यस्य तदा भाति, वालुकाकवलोपमम् । अन्योन्यस्य च तौ भावं, लक्षयामासतुस्तराम् ॥९॥ व्याख्याश्रुतः समुत्थाय, जग्मतुर्भवनं निजम् । ततो वसुर्जगादैवं, भ्रातः त्वं भावितः किल ॥१०॥ जैनवाचा न चाऽहं भोस्तदत्र किमु कारणम् । एकचित्ततया ख्यातावावां लोके इयच्चिरम् ॥११॥ इदानीमत्र संजातं, विभिन्नं चित्तमावयोः । तदत्र कारणं किं स्यादन्यो वक्ति स्म विस्मितः ॥ ॥१२॥ सत्यमेव ममाप्यत्र, विकल्पः संप्रवर्तते । केवलं केवली नूनं, निर्णयं नौ करिष्यति ॥१३॥ स एव प्रश्नितोऽत्रार्थे, तद्याता-स्वस्तदन्तिके । एवं तौ निश्चयं कृत्वा, प्रातर्यातौ तदन्तिके ॥१४॥ पप्रच्छतुस्तमाराध्य विनयेन स्वसंशयम् । सोऽप्युवाच पुरैकेन श्लाघितो युवयोर्मुनिः ॥१५॥ तथाहि-आस्तां युवां क्वचिद् ग्रामे, द्रङ्गिकस्य तनूद्भवौ । कालक्रमेण तारुण्यं, लावण्यपदमा-गतौ ॥१६॥ संजाततद्विकारौ च, जातौ भूतेरभावतः । तथा मनोरथाः किञ्चित् , न पूर्यन्ते कथञ्चन ॥१७॥ अनार्यकार्यमारब्धौ, कर्तुं चौर्यं ततोऽन्यदा । ग्रामान्तरे हृता गावो, गत्वा रात्रावतित्वरौ ॥१८॥ दण्डपासिकलोकेन, भवन्तौ त्रासितौ ततः । प्रारब्धौ नंष्टुमेकोऽथ, साधुः शैलगुहागतः ॥१९॥ ध्यानमौनक्रियालग्नो, युवाभ्यां समदृश्यत । ततश्च धर्मपालस्य जीवेनेदं व्यचिन्त्यत ॥२०॥ अहो सुलब्धं जन्मास्य, प्रशस्याचारसद्मनः । यदित्थं निर्भयः शान्तः, त्यक्तसंगोऽवतिष्ठते ॥२१॥ वयं पुनरधन्यानामधन्या धनकांक्षया । विदधाना विरुद्धानि पराभवपदं गताः ॥२२॥ धिक्कारोपहतात्मानो, यास्यामः कां गतिं मृताः । ही जाता दुःस्वभावेन, लोकद्वयविराधकाः ॥२३॥ तदेवं निर्मलं साधोर्वृत्तं वारितकल्मषम् । विपरीतमतोऽस्माकमस्मात्कल्याणकं कुतः ॥२४॥ अन्यः पुन-रुदासीनः समभूत्तं मुनिं प्रति । गुणरागादवापैको बोधिबीजं न चापरः ॥२५॥ ततस्तनुकषायत्वाद् भवन्तौ दानतत्परौ । नरजन्मो-चितं कर्म बद्धवन्तावनिन्दितम् ॥२६॥ मृत्वा युवां समुत्पन्नावेतावत्र वणिक्सुतौ । जातावनिन्दिताचारौ वणिग्धर्मपरायणौ ॥२७॥

एकस्य तदेतस्य जातं बीजस्य तत्फलम् । सद्बोधरूपमन्यस्य निर्बीजत्वेन नाभवत् ॥२८॥ एवं पूर्वभवादि श्रुत्वा जातिस्मरणं प्राप्तो धर्मपालः संजातप्रत्ययश्च, भावतो जिनोद्दिष्टधर्मपरः सिद्धिं यास्यति। अपरस्य च बोधिबीजभूतशिष्टाचारमाध्यस्थ्यादपि संसार एव, इति परिभाव्य सम्यक् शिष्टाचारगुणादिप्रशंसावता भाव्यं सुश्रावकेनेति । यतः–

अकुर्वन्नपि सत्पुण्यं शिष्टाचारप्रशंसया । दम्भसंरम्भमुक्तात्मा प्राणी प्राप्नोति तत्फलम् ॥१॥ बिभ्राणोऽपि गुणश्रेणीरन्येषु गुणमत्सरी । निमज्जत्येव संसारे मुग्धो दुःखाकुलाशयः ॥२॥ अतो विवेकज्ञजनेन शिष्टाचारप्रशंसाप्रवणेन भाव्यम् । विशुद्धधर्मोज्ज्वलकीर्तिलाभाभिलाषिणाऽत्रोचितवृत्तियुक्त्या ॥१॥ ( इति द्वितीयो गुणः )

तथा कुलं–पितृपितामहादिपूर्वपुरुषवंशः, शीलं–मद्यमांसनिशाभोजनानन्तकायादिभोगपरिहाररूपः समाचारः, यद्वा–समानदेवगुरुक्रियाकलापासेवनादिरूपस्ताभ्यां समास्तुल्याः कुलशीलसमा इत्यर्थः । गोत्रं नाम तथाविधैकपुरुषप्रभवो वंशस्तत्र जाताः गोत्रजास्तेभ्योऽन्ये ये तैः सार्धं कृतोद्वाहो विहितविवाहः, अग्निदेवादिसाक्षिकं पाणिग्रहणं विवाहः । स च लोकेऽष्टधा । तत्रालङ्कृत्य कन्यादा ब्राह्मयो विवाहः १ । विभवविनियोगेन कन्यादानं प्राजापत्यः २ । गोमिथुनदानपूर्वकमार्षः ३ । यत्र यज्ञार्थमृत्विजः कन्याप्रदानमेव दक्षिणा स दैवः ४ । एते चत्वारो धर्म्याः । मातुः पितुर्बन्धूनां वाऽप्रामाण्यात् परस्परानुरागेण मिथः समवायाद् गान्धर्वः ५ । पणबन्धेन कन्याप्रदानमासुरः ६ । प्रसह्य कन्याग्रहणाद् राक्षसः ७ । सुप्तप्रमत्तकन्याग्रहणात् पैशाचः ८ । एते चत्वारोऽपि अधर्म्याः । यदि वधूवरयोः परस्परं रुचिरस्ति तदा अधर्म्या अपि धर्म्याः, शुद्धकलत्रादिलाभफलो विवाहः, अशुद्धभार्यादियोगे नरक एव, इह सततकलहादिकरणैरयशोदुःखप्राप्तेः, परत्र दुर्गतिकारणं च, दुष्टाभिसन्धिजनितकर्मबन्धापत्तेः । यतः–कुग्रामवासः

कुनरेन्द्रसेवा कुभोजनं क्रोधमुखी च भार्या। कन्याबहुत्वं च दरिद्रता च षड् जीवलोके नरका भवन्ति ॥१॥ शुद्धतादिपरिज्ञानं वरवधूगुणपरीक्षणादिभिः। तत्र–कुलं च शीलं च सनाथता च विद्या च वित्तं च वपुर्वयश्च। वरे गुणाः सप्त विलोकनीयास्ततः परं भाग्यवती च कन्या ॥१॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम्। त्रिगुणाधिकवर्षाणां चापि देया न कन्यका ॥२॥ बन्धुलक्षणलावण्यकुलजात्याद्यलङ्कृताम्। कन्यकां वृणुयाद्रूपवतीमव्यङ्गविग्रहाम् ॥३॥ अष्टमाद्वर्षतो यावद्वर्षमेकादशं भवेत्। तावत् कुमारिका लोके न्याय्यमुद्वाहमर्हति ॥४॥ इत्यादिपरीक्षापूर्वकं समानाचारकुलशालिवधूवरयोगे धर्मशोभायश ऐहिकसुखादिप्राप्तेः। अन्यथा परस्परमसमानतायां कलहकलङ्कादिप्राप्तेः, सुभद्रावत्, तथाहि–वसन्तपुरे पुरे जितशत्रुर्नृपः, जिनदत्तश्रेष्ठी श्राद्धः सम्यग्विज्ञातजीवाजीवादिपदार्थः शङ्काकाङ्क्षाविचिकित्सामिथ्यादृक्प्रशंसासंस्तवरूपातिचाररहितः श्रीसम्यक्त्वाऽलङ्कृतः। कालेन सुभद्रातनयाऽजनि, शुद्धश्राविका रूपलावण्यसौभाग्यामृतसिन्धुः। वरणार्थमनेके वराः समायान्ति। परं श्रेष्ठी श्राद्धसुतं विना न दित्सति तां परेभ्यः। यतः–विवेकिना धर्मयशोऽभिवृद्ध्यै समं कुलाचारमिहावलोक्य। वराय शुद्धाय सुता प्रदेया नेया तथाऽन्यापि सुखोदयाय ॥१॥ अथाऽन्यदा तत्र चम्पाया वाणिज्यार्थं बुद्धदासाख्यो वणिग् बौद्धश्राद्धोऽऽगात्। स सुभद्रामिहाद्राक्षीत्, तद्रूपेण च मोहितः। कपटश्रावको जज्ञे, नित्यं धर्मं तथाऽशृणोत् ॥१॥ क्रमाद्विज्ञाततत्त्वः सन् स भावश्रावकोऽभवत्। जिनदत्तोऽपि विज्ञाय तद्भावं दत्तवान् सुताम् ॥२॥ करग्रहमहो जज्ञे कालाच्च कियतोऽपि सः। तामादाय ययौ चम्पां साऽकरोद्धर्ममार्हतम् ॥३॥ श्वश्रूर्ननान्दा बुद्धानां भक्ता निन्दति तामथ। चक्रे भिन्नं गृहं तेन तत्र साध्व्यश्च साधवः ॥४॥ प्रायोग्यार्थमुपायान्ति स्वज्ञादीनां च मत्सरः। आहुस्ताः साधुरक्तेयं भर्त्ता प्रत्येति तन्न तु ॥५॥ अन्यदा कोऽपि तत्रागाद् बलरूपगुणान्वितः। जिनकल्पी विचरितुं चारित्रमिव मूर्त्तिमत् ॥६॥

वातोद्धूतं तृणं तस्य कथञ्चित्प्राविशद् दृशि। स तु निष्प्रतिकर्मत्वात् तदप्यपनिनाय न ॥७॥ विनश्यन्मा दृगेतस्य कुर्वती प्रतिलाभनम्। सुभद्रा चापि दक्षत्वाज्जिह्वया तदपानयत् ॥८॥ साधुभाले च संक्रान्तस्तद्भालतिलकस्तदा। ज्ञातस्तथा न स मुनौ निवृत्ते श्वश्रुकादिभिः ॥९॥ तद्भर्त्तुर्दर्शितः पश्य प्रियातिलकसंक्रमम्। स दध्यौ परमार्हत्याः किमेतदपि सम्भवेत् ॥१०॥ बलिनो विषया यद्वा मन्दस्नेहोऽभवत्ततः। सुभद्रया च विज्ञातो वृत्तान्तः कथमप्यसौ ॥११॥ तामपभ्राजनां हर्त्तुं कायोत्सर्गेण सा निशि। तस्थौ शासनदेव्यै साप्यागात्तच्छीलसंविदा ॥१२॥ सोचे किं ते प्रियं कुर्वे? सुभद्रोवाच तां प्रति। हृत्वाऽपवादं कुर्वीथाः शासनस्य प्रभावनाम् ॥१३॥ देव्युचेऽहं प्रगे कृत्वा नगर्या द्वारबन्धनम्। व्याकुलेष्वथ पौरेषु वक्ष्यामि व्योमनि स्थिता ॥१४॥ त्रिधापि शुद्धशीला स्त्री चालनीनिहितोदका। त्रिराच्छोटयिता द्वाराण्युद्घटन्ते यथा क्षणात् ॥१५॥ पौरीभिर्वीक्षितेऽन्याभिश्चालन्यामस्थितेऽम्भसि। कुर्वीथास्त्वमिदं याताऽपवादो भावि ते यशः ॥१६॥ ततस्तथैव सा कृत्वा त्रिद्वारोद्घाटनं पुरः। निवृत्ताऽन्या सती काऽपि तुर्यमुद्घाटयिष्यति ॥१७॥ ततोऽभूत् तत्र जैनस्य शासनस्य प्रभावना। तच्छ्वशुरं च राजा च प्रबुद्धमखिलं पुरम् ॥१८॥ एवंविधा कियत्यो भवन्ति,तस्मात्परीक्षापूर्वकं विवाहविधौ यतितव्यं, तत्फलं च वधूरक्षणोपायमाचरतः सुजाताऽतिजातसुतसंततिः। यदागमः—

चउविहा पुत्ता पन्नत्ता तंजहा—अइजाए १ समाणजाए २ नीए ३ कुलंगारे ४ ॥ अनुपहता चित्तवृत्तिर्गृहकृत्यसुविहितत्वमाभिजात्याचारविशुद्धत्वं देवातिथिबान्धवसत्कारानवद्यत्वं चेति वधूगुणाः। "वधूरक्षणोपायाश्चैते। शय्योत्पाटनगेहमार्जनपयःपावित्र्यचुल्लीक्रियास्थालीक्षालनधान्यपेषणभिदागोदोहतन्मन्थनैः। पाकैस्तत्परिवेषणैः समुचितैः पात्रादिशौचक्रिया, श्वश्रूभर्तृननान्दृदेवृविनयैः कष्टं वधूर्जीवति ॥१॥ इत्यादिगृहकर्मविनियोगः परिमितोऽर्थसंयोगोऽस्वातन्त्र्यं सदाचारमातृतुल्यस्त्रीलोकावरोधनमिति। यदुक्तम्—

निषिद्धं हि कुलस्त्रीणां, गृहद्वारनिषेवणम् । वीक्षणं नाटकादीनां, गवाक्षावस्थितिः सदा ॥१॥ अङ्गप्रकटनं क्रीडा, कौतुकं जल्पनं परैः । कार्मणं शीघ्रयानं च, कुलस्त्रीणां न युज्यते ॥२॥ लिङ्गिन्या वेश्यया दास्या स्वैरिण्या कारुकस्त्रिया । युज्यते नैव सम्पर्कः कदाचित् कुलयोषिताम् ॥३॥ यात्राजागरदूरनीरहरणं मातुर्गृहेऽवस्थितिः, वस्त्रार्थं रजकोपसर्पणमपि स्याद् दूतिकामेलकः । स्थानभ्रंशसखीविवाहगमनं भर्तृप्रवासादयो व्यापाराः खलु शीलजीवितहराः प्रायः सतीनामपि ॥४॥ निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता सदा, स्निग्धा बन्धूषु वत्सला परिजने स्मेरा सपत्नीष्वपि। पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्द्वेषिषु स्त्रीणां संवननं नतभ्रु ! तदिदं बीजौषधं भर्तृषु ॥५॥ एवं गृहस्थः सुकलत्रयोगात् , जनेषु शोभां लभते सुखी च । देवाऽतिथिप्रीणनपुण्यकर्माऽर्जनैः परत्रापि गतिं विशुद्धाम् ॥६॥ (तृतीयो गुणः)

पापभीरुः इति ॥ पापानि दृष्टादृष्टापायकारणानि तेभ्यो भीरुः । तत्र दृष्टापायकारणानि चौर्यपरदारागमनद्यूतरमणादीनि, इहलोकेऽपि सकललोकप्रसिद्धविडम्बनास्थानानि, यदाह-द्यूताद्राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवा, मद्यात्कृष्णनृपश्च राघवपिता पापर्द्धितो दूषितः । मांसाच्छ्रेणिकभूपतिश्च नरके चौर्याद्विनष्टा न के ? वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीरतो रावणः ॥१॥ अदृष्टापायकारणानि मद्यमांसासेवनादीनि शास्त्रनिरूपितनरकादियातनाफलानि । यदागमः-चउहिं ठाणेहिं जीवा नेरइ० तंजहा- महारंभयाए १ महापरिग्गहाए २ कुणिमाहारेणं ३ पञ्चेंदियवहेणं ४। इति । पञ्चेन्द्रियवधासक्ता मांसाशनकृतादराः । जायन्ते नरके जीवा बह्वारम्भपरिग्रहाः ॥१॥ मांसोपलक्षणात् २२ अभक्ष्य ३२ अनंतकायादिपरिभोगक्रयविक्रयादीन्यपि निर्वहमाणेन पापभीरुणा त्याज्यान्येव विमलवत् । तथाहि-भवितव्यं सदा पापभीरुणा गृहमेधिना । पापभीरोर्भवन्त्येव विमलस्येव सिद्धयः ॥१॥ कुशस्थले

पुरे श्रेष्ठिपुत्रौ विमलसहदेवौ, विमलः पापभीरुः, न सहदेवः, द्वाभ्यां ससम्यक्त्व १२ व्रतानि गुरोः पार्श्वे गृहीतानि । एकदा व्यवसायार्थं देशान्तरे चलितौ, विमलो मार्गपथिकैर्मार्गं पृष्टः, कथयति, न जानामि, अपरे सार्थिनः श्रावस्त्यां प्रति प्रभूतलाभं श्रुत्वा चलिताः, विमलस्तु मार्गे सूक्ष्ममण्डूकिकाः प्रभूताः दृष्ट्वा न गच्छति, कनकपुरं प्रति प्राचलत् । मार्गे एकस्मिन्ग्रामे गुलीमदनमधुलुणजीणतिलादिपापवस्तूनि समर्घानि लभ्यन्ते, विमलः पापभीरुतया न गृह्णाति, लोका नवनीतं तापयित्वा घृतं ददाति, विमलस्तुनादत्ते, सहदेवः पुनस्तानि पापवस्तूनि गृहीतुं सत्यंकारार्पणं करोति,विमलस्तद् भनक्ति, पुनरेकत्र ग्रामे जालिकलोको मत्स्यजालार्थ सूत्र मार्गयन्ति, सहदेवोऽर्पयितुमुत्सहते, विमलस्तु नार्पयति, कनकपुरे प्राप्तौ, भोजनवेलायां विमलपार्श्वे सार्थोऽग्निं याचते, विमलस्तु नो दत्ते, देवः कोऽपि परीक्षार्थं सार्थीभूय कुपितो राक्षसरूपं करोति, विमलं भापयति, विमलो न विभेति, ततो राक्षसः कथयति, अरे यद्यग्निं ददासि तदा त्वां मुञ्चामि, स वक्ति भो राक्षस! अग्निः सर्वतोमुखं शस्त्रं श्रावकैर्न दीयते, यतः—महुमज्जमंसभेसज्जमूलसत्थग्गिजंतमंताई । न कयावि हु दायव्वं सड्ढेहिं पावभीरूहिं ॥१॥ तेनाऽहं प्राणान्तेऽप्यग्निं न ददाम्येव, अत्रान्तरे राक्षसस्तत्सत्त्वतुष्टः स्वं रूपं प्रकाश्याह—हे विमल! तव प्रशंसा स्वर्गे इन्द्रेण कृता विमलसमः पापभीरुर्नास्ति मया मण्डूकीप्रभृति तव क्षोभाय कृतं, त्वं न चलितः, विषहरमणिं दत्त्वा देवः स्वस्थानमगात् , विमलसहदेवौ पुरमध्ये गतौ, अत्रान्तरे पुरान्तः पटहो वाद्यमानोऽस्ति, यः कश्चिद् राजपुत्रं विषधरदष्टमुज्जीवयति तस्य राज्यार्धं ददाति, एवमाकर्ण्य विमलेन निषिद्धोऽपि सहदेवस्तं पटहं गृहीत्वा राजकुमारस्य मणिमहिम्ना विषमुत्तारितवान् , राजा राज्यार्धं तस्य दत्ते, स कथयति, मम वृद्धभ्राता विमलः, तस्मै दीयतां, राजा तथा करोति, विमलस्त्वधिकरणभीरुतया न गृह्णाति राज्यं, सहदेवस्यैव दत्तं, विमलाय श्रेष्ठिपदं दत्तं राज्ञा, विमलः सर्वत्र न्यायमार्गेण

संचरन् जिनधर्मं विधत्ते, सहदेवस्त्वकराकरलोकपीडनादिपापानि निःशङ्कतया कुरुते, विमलो निषेधति, स तु न विरमति, ततः सहदेवो वैरिणा मारितो नरकं जगाम, विमलस्तु धर्मं कृत्वा स्वर्गतः, एकावतारी शमीभूत्वा मुक्तिगमीति । विमलवदिति यः स्यात्पापभीरुर्विवेको सततसदयचित्तो धर्मकर्मैकचित्तः। स सुरनरसुखानि प्राप्य जाग्रद्विवेकः कलयति शिवलक्ष्मीनायकत्वं सुखेन ॥१॥ (चतुर्थो गुणः) ।

तथा प्रसिद्धस्तथाविधापरशिष्टाचारसंमततया रूढिमागतो देशाचारो महाजनोचितभोजनाच्छादनगृहकार्यादिचित्रक्रियात्मकः सकलमण्डलव्यवहारस्तं सम्यगाचरन् गृही धर्माय कल्पते इत्युत्तरेण योगः, यतः-लोकः खल्वाधारः सर्वेषां धर्मचारिणां यस्मात् । तस्माल्लोकविरुद्धं धर्मविरुद्धं च संत्याज्यम् ॥१॥ सल्लोकाचारो हि परिशील्यमानः प्रायेणैहिकयशोमहत्वशोभादिवृद्ध्यै भवति, लोकाभिगम्यतया चिकिर्षितधर्मकर्मणां सुखेन सिद्धिरपि स्यात् । तदाचारलंघने हि तद्देशवासिजनविरोधसंभवादकल्याणलाभः स्यात्, यदुक्तम्-व्यलीकमस्तु मा वाऽस्तु लोकोक्तिस्तु सुदुस्सहा । भज्यतां भाजनं मा वा टणत्कारस्तु मारयेत् ॥१॥ समाचरन् शिष्टमतस्वदेशाचारं यथौचित्यवशेन लोके । सर्वाभिगम्यो लभते यशांसि स्वकार्यसिद्धिं च गृहाश्रमस्थः ॥१॥ (पञ्चमो गुणः)

अवर्णोऽश्लाघा तं वदतीत्येवं शीलोऽवर्णवादी न क्वापि, जघन्यमध्यमोत्तमभेदेषु जन्तुषु परावर्णवादो हि बहुदोषः । यदाह-परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्म । नीचैर्गोत्रं प्रतिभवमनेकभवकोटिदुर्मोचम् ॥१॥ स्वश्लाघा परनिन्दा च मत्सरो महतां गुणे । असंबद्धप्रलापित्वमात्मानं पातयन्त्यधः ॥२॥ सन्तोप्यसन्तोऽपि परस्य दोषा नोक्ताः श्रुता वा गुणमावहन्ति । वैराणि वक्तुः परिवर्धयन्ति श्रोतुश्च तन्वन्ति परां कुबुद्धिम् ॥३॥ तथा-दूषणं मतिरुपैति नोत्तमी माध्यमी स्पृशति भाषते न च । वीक्ष्य पार्श्वमथ

भापतेऽधमो रारटीति सहसाऽधमाधमः ॥४॥ परनिन्दा महापापं परपापान्यहो यतः । अकृतान्यपि लिम्पन्ति तत्कर्त्रीं जरतीं यथा ॥१॥ सुग्रामे सुन्दरः श्रेष्ठी दाता लोकप्रियो । यतः–

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः । आगच्छन् वाञ्छयते लोकैर्वारिदो न तु वारिधिः ॥१॥ एका तु तत्प्रातिवेश्मिकी निन्दति–वैदेशिका अस्य समायान्ति, असौ धर्मीति तेऽस्य गृहे स्वद्रव्यं निक्षिपन्ति, व्याजेनास्याऽर्पयन्ति, ते तु विदेशे म्रियन्ते, अस्योत्सवः, ज्ञातोऽयं धर्म्मी। एकदा निशि कार्पटिकः क्षुधार्त्त आगात्, तदा किंचिद् भोज्यं पेयं चास्य नाऽभूत्, स तु दानव्रती आभीरीगृहात्तक्रमानीय तमपीप्यत् सोऽम्रियत, तत्तक्रमुद्घाटमुखायामाभीरीशिरस्थायां स्थाल्यां शकुनिकाधोधृतमहाहिमुखगलितगरलमिलितमासीत्, प्रातस्तं मृतं दृष्ट्वा वृद्धा जहर्ष, दृष्टं दातुश्चरितं, विपदोऽयं ग्रन्थिकालोभात्, अत्रान्तरे सा कार्पटिकहत्या भ्रमति, विचारयति च, कस्याऽऽहं लगामि, दाता विशुद्धात्मा सर्पोप्यज्ञः परवशश्च शकुनिका तु सर्पाशनधर्मा, आभीरी अज्ञा, तत्को मया ग्राह्यः, एवं विमृशन्ती तामेव निन्दाकर्त्रीं वृद्धां जग्राह, सद्यःश्यामा कुब्जा कुष्ठिनी च जाता, हत्यया स्वस्थया लोकान् प्रत्यूचे–कुम्भभिन्नयुगलेन, किल्बिषं बालकस्य जननी व्यपोहति । कण्ठतालुरसनाभिरुज्झता, दुर्जनेन जननी व्यपाकृता ॥१॥ तदेवं सकलजनगोचरोऽप्यवर्णवादो न श्रेयान्, किं पुना राजामात्यदेवगुरुसंघादिषु बहुजनमान्येषु, राजाद्यवर्णवादाद् वित्तादिप्रणाशादिरपि दोषः स्यात्; भवान्तरे च नीचैर्गोत्रकलङ्कादिप्राप्तेः, तथा चोक्तं–नो चेव भासियव्वं हियत्थिणा दुक्खकारणं वयणं । अलियं अब्भक्खाणं पेसुन्नं मम्मवेहाई ॥१॥ सन्तो वि हु वत्तव्वो परस्स दोसो न होइ विबुहाणं । किं पुण अविज्जमाणो पयडो छन्नो य लोयस्स ॥२॥ विअरइ अब्भक्खाणं इयरस्सवि जो जणस्स दुब्बुद्धी । सो गरहिज्जइ लोए लहइ अ दुक्खाइँ

तिक्खाइं ॥३॥ जो पुण जइण समियाणं सुद्धभावाण बंभयारीणं। अब्भक्खाणं देइ मच्छरदोसेन दुट्ठमई ॥४॥ निव्वित्तिउण
तिव्वं पावं पावेइ सो दुहमणंतं। सीया इव पुव्वभवे मुणिअब्भक्खाणदाणाओ ॥५॥ यथा–अत्रैव भरते मिणालकुण्डपुरे
श्रीभूतिः पुरोधा, सरस्वती भार्या, तयोः पुत्री वेगवती, एकदा तत्रैकः साधुः शुद्धव्रत आगात्, उद्याने प्रतिमां स्थितः लोको
वन्दते भक्त्या, साधुपूजां दृष्ट्वाऽलीकमात्सर्येण वेगवती लोकानाह, एष मुण्डः पाखण्डी किं पूज्यते ब्राह्मणान्मुक्त्वा? एष मया
रमण्या सह रममाणो दृष्ट इति कूटमालं साधोर्दत्तवती, लोका मुग्धास्तदनु साधुपूजनादिभ्यो निवृत्ताः, मुनिनाऽपि लोक-
विरक्त्या ज्ञातं तदलीककलङ्कादि, ततो मा जिनशासनेऽपभ्राजना मन्निमित्ता भूयादिति मनसि कृत्वा यावदेष कलङ्को नोत्तरति
तावता मया न भोक्तव्यमिति प्रतिज्ञाय कायोत्सर्गेण स्थितः, ततः शासनदेव्या सांनिध्यात्–तत्तो वेगवइए देहे वियणा समुट्ठिया
तिव्वा। पाउब्भूआ अरइ सूणं वयणं च सहस्सत्ति ॥१॥ ततस्तया सञ्जातपश्चात्तापया साधोः पार्श्वे गत्वा सर्वलोकसमक्षं स्वनिन्दाप-
रया मया मुधैतदालं साधोर्दत्तं मात्सर्येण इति क्षमयित्वा पादयोर्लग्ना, ततः शासनदेव्या सज्जीकृता, धर्मं श्रुत्वा दीक्षां गृहीत्वा
चिरं पालयित्वा सौधर्मे देवी, ततो जनकसुता सीता जाता, कूटालदानादत्र कलङ्कः, साधुरप्युत्तरितकलङ्को लोकैः पूजितः जिनशा-
सने महती प्रभावना जातेति, यश्च परनिन्दां श्रृणोति सोऽपि पापी यतः–

निवार्यतामालि! किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः। न केवलं यो महतां विभाषते श्रृणोति तस्मादपि यः स पाप-
भाक् ॥१॥ इत्थं सदा निन्द्यमवर्णवादं त्यजन् परेषां श्रवणं च तस्य। जगज्जनश्लाघ्यतया गृहस्थः सद्धर्मयोग्यो भवतीह सम्यक् ॥२॥

(षष्ठो गुणः)

तथा अनेकं बहु यन्निर्गमद्वारं तदेव प्रवेशद्वारं तेन विवर्जितं निकेतनं यस्य स तथा। बहुषु हि निर्गमप्रवेशद्वारेष्वऽनुपलक्ष्यमाणनिर्गमप्रवेशानां दुष्टलोकानामापातजः स्त्रीविद्रावणादि विप्लवः स्यात्, अत्र च अनेकद्वारतायाः प्रतिषेधेन विधिराक्षिप्यते, ततः प्रतिनियतद्वारसुरक्षितगृहो गृहस्थः स्यादिति लभ्यते, तथाविधमपि निकेतनं स्थाने एव निवेशयितुं युक्तं नाऽस्थाने। स्थानं तु शल्यभस्मक्षात्रादिदोषनिषिद्धायादिरहितं बहलदूर्वाप्रवालकुशस्तम्बप्रशस्तवर्णगन्धमृत्तिकासुस्वादुतोयोद्गमनिधानादिमच्च—यदुक्तम्—शीतस्पर्शोष्णकाले याऽत्युष्णस्पर्शा हिमागमे। वर्षासु चोभयस्पर्शा सा शुभा सर्वदेहिनाम् ॥१॥ हस्तमात्रं खनित्वादौ, पूरिता तेन पांशुना। श्रेष्ठा समधिके पांशौ, हीने हीना समे समा ॥२॥ त्रिपञ्चसप्तदिवसैरुप्तव्रीह्यादिरोहणात्। उत्तमा मध्यमा हीना विज्ञेया त्रिविधा मही ॥३॥ अथवा भूरदिग्मूढा चतुरस्रा शुभाकृतिः। त्र्यह वीजोद्गमा धन्या पूर्वेशानोत्तरप्लवा ॥४॥ स्थानगुणदोषपरिज्ञानं च शकुनस्वप्नोपश्रुतिप्रभृतिनिमित्तादिबलेन। स्थाननिषेधस्त्वेवं—प्रथमान्त्ययामवर्जं द्वित्रिपहरसम्भवा। छाया वृक्षध्वजादीनां सदा दुःखप्रदायिनी ॥१॥ वर्जयेदर्हतः पृष्टं दृष्टिं चण्डीशसूर्ययोः। वामाङ्गं वासुदेवस्य दक्षिणं ब्रह्मणः पुनः ॥२॥ स्थानमेव विशिनष्टि—अतिव्यक्तमतिप्रकटं, अतिगुप्तमतिप्रच्छन्नं, तन्निषेधादनतिव्यक्तगुप्तं। तत्रातिव्यक्ते हि असंनिहितगृहान्तरतया परिपार्श्वतो निरावरणतया चौरादयोऽभिभवेयुः। अतिगुप्ते च सर्वतो गृहान्तरैर्निरुद्धत्वान्न स्वशोभां लभते, प्रदीपनकाद्युपद्रवेषु दुःखनिर्गमप्रवेशं गृहं भवति। पुनः कथम्भूते ? सुप्रातिवेश्मिके—शोभनाः शीलादिसम्पन्ना प्रातिवेश्मिका यत्र। कुशीलादिप्रातिवेश्मिकत्वे हि तदालापश्रवणतच्चेष्टादर्शनादिवशात्स्वतः सगुणस्यापि गुणहानिः स्यात्, साधुदर्शनजनितदयापरिणामक्षकरिकगृहासन्नकृतहस्तिशालास्थगजवत् संगमकवद् वा, यथा हि संगमकस्य सुप्रातिवेश्मिकबलेन दानसामग्रीयोगे प्रेत्य शालिभद्रादित्वप्राप्तिः। दुःप्रातिवेश्मिकास्त्वेते